ॐ ॥ गायत्री रामायण ॥ॐ

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ 1

स हत्वा राक्षसान्सर्वान् यज्ञघ्नान् रघुनन्दनः । ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ 2

विश्वामित्रः सरामस्तु श्रुत्वा जनकभाषितम् | वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ 3

तुष्टावास्य तदा वंशं प्रविश्य च विशाम्पतेः । शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ॥ 4

वनवासं हि सङ्ख्याय वासांस्याभरणानि च । भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ 5

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् । राजा माता पिता चैव राजा हितकरो नृणाम् ॥ 6

निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् । उटजे राममासीनं जटामण्डलधारिणम् ॥ 7

यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् । अद्यैव गमने बुद्धिं रोचयस्व महामते ॥ 8

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो । मृगरूपमिदं दिव्यं विस्मयं जनयिष्यति ॥ 9

गच्छ शीघ्रमितो वीर सुग्रीवं तं महाबलम् । वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव ॥ 10

देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये । सुखदुःखसहः काले सुग्रीववशगो भव ॥ 11

वन्दितव्यास्ततः सिद्धास्तपसा वीतकल्मषाः । प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥ 12

स निर्जित्य पुरीं लङ्कां श्रेष्ठां तां कामरूपिणीम् । विक्रमेण महातेजा हनूमान् कपिसत्तमः ॥ 13

धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । मम पश्यन्ति ये वीरं रामं राजीवलोचनम् ॥ 14

मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः । उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ 15

हितं महा मृदु हेतुसंहितं व्यतीतकालायति सम्प्रतिक्षमम् । निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ 16

धर्मात्मा रक्षसश्रेष्ठः सम्प्राप्तोऽयं विभीषणः । लङ्कैश्वर्यमिदं श्रीमान्ध्रुवं प्राप्नोत्यकण्टकम् ॥ 17

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा । स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ 18

यस्य विक्रममासाद्य राक्षसा निधनं गताः । तं मन्ये राघवं वीरं नारायणमनामयम् ॥ 19

न ते ददृशिरे रामं दहन्तमपिवाहिनीम् । मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ 20

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली । श्रद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥ 21

चलनात्पर्वतस्यैव गणा देवाश्च कम्पिताः । चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् ॥ 22

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम् । सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर ॥ 23

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् । तामेव रात्रिं सीतापि प्रसूता दारकद्वयम् ॥ 24

इदं रामायणं कृत्स्नं गयत्रीबीजसंयुतम् । त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥

इति गायत्रीरामायणं सम्पूर्णम् ।